# Sadvidya Journal of Research in Sanskrit

**Karthik Sharma K**

**Received : 16-11-2023 , Approved : 07-12-2023 , Published : 13-12-2023**

DOI: **10.62705/sjrs.2023.01.25**

**Abstract**

प्रमाणानां मध्ये अनुमानप्रमाणम् अत्यन्तं प्राधान्यम् आवहति । सर्वेषु आस्तिकदर्शनेषु अनुमानप्रमाणस्य अतिगम्भीरतया  निरूपणम् कृतम् अस्ति । शास्त्रीयविचारः अस्माभिः लोके दर्शनेषु च कर्तव्यः भवति । अस्मिन् प्रबन्धे लोके क्रियमाणे विचारे दर्शने च क्रियमाणे विचारः अनुमानप्रमाणस्य कथमुपयोगः इत्येतत् प्रदर्श्यते ।

**Keywords:**

अनुमानप्रमाणम्, अनुमानम्, शास्त्रम्, उपयोगः, प्रमाणम्, तर्कः, युक्तिः

**Co Authors**

Karthik Sharma K, Assistant Professor, School of Vedic Knoweldge Systems, Chinmaya Vishwa Vidyapeeth, Ernakulam

**Abbreviations**

**Introduction**

उपोद्घातः

तदिदं प्रसिद्धं यत् दार्शनिकग्रन्थेषु प्रतिपाद्यविषयाः प्रमाणप्रमेयविभागयोः विभक्ताः इति । प्रमाशब्दस्य

यथार्थानुभवपरत्वात्, यथार्थानुभवकरणानि प्रमाणानि इति परिभाष्यन्ते । प्रमाणस्वरूपविषये तत्संख्याविषये च दार्शनिकानां नास्ति एकाभिप्रायः । तदुक्तं मानमेयोदये ;

प्रत्यक्षमनुमानं च शब्दं चोपमितिस्तथा ।

अर्थापत्तिरभावश्च षट् प्रमाणानि मादृशाम् ॥[1]

चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ

भासर्वज्ञश्च सांख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति ।

प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः

षट्कं पौराणिकास्त्वष्टकमभिदधिरे संभवैतिह्ययोगात् ॥[2]

अस्मिन् च प्रबन्धे मया नैयायिकमतानुसारेण अनुमितिः कथमुत्पद्यते इति निरूपयितुमिष्यते । एवमेव अनुमानप्रमाणस्य परिज्ञानेन दार्शनिकविषयेषु लौकिकविषयेषु च क्रियमाणायां शास्त्रीयविचारपद्धतौ कथमुपयोगः स्यात् इति सोदाहरणं विमर्शं कर्तुमिष्यते ।

## Literature Review

मानमेयोदयः, तर्कसङ्ग्रहदीपिका, कारिकावली इत्यादिग्रन्थेषु अनुमानप्रमाणस्य निरूपणं कृतमस्ति । तदनुसारेण अस्मिन् प्रबन्धे अनुमानप्रमाणं निरूप्यते ।

## Statement of the Research Problem

अनुमानप्रमाणस्य दर्शनेषु इव लौकिकजीवने अपि उपयोगः अस्ति वेति संशयः प्रबन्धेस्मिन् परिहर्तुं इष्यते।

## Methodology

दर्शनसन्दर्भाणां लौकिकसन्दर्भाणां च परीक्षणं कृत्वा अनुमानप्रमाणस्य उपयोगः सविमर्शं निरूप्यते ।

## Analysis and Discussion

नैयायिकमतानुसारेण अनुमित्युत्पत्तिक्रमः

नैयायिकमतानुसारेण अनुमित्युत्पत्तिक्रमम् अवगन्तुम् एतादृशः कश्चन सन्दर्भः विभाव्यताम् ; कश्चन पुरुषः प्रातःकाले उत्थाय गृहस्य महानसं प्रति गतवान्, तत्र च

सः धूमं वह्निं च प्रत्यक्षीकृतवान् । स ततः गाः परिपालयितुं गोशालां प्रति गतवान्, तत्र च गवाम् अतिशैत्यवारणाय सज्जीकृतं वह्निं धूमसहितं दृष्टवान् । ततश्च सः मधुग्रहणाय पर्वतं प्रस्थितः मध्येमार्गं चत्वरे यात्रिभिः सज्जीकृतं वह्निं धूमेन सह दृष्टवान् । ततोऽपि निर्गतः सः पर्वतसमीपं गतः पर्वते धूमं  दृष्ट्वा पर्वते वह्निरस्तीति निश्चित्य पर्वतं पश्चात् गच्छामीति निश्चित्य गृहं प्रत्यागतवान् । एतादृशसन्दर्भे पर्वते चक्षुषा वह्निमपश्यन्नमपि अयं पुरुषः वह्निसत्त्वं पर्वते निश्चिनोतीति अवगम्यते । अयश्च निश्चयः प्रत्यक्षज्ञानरूपः भवितुं नार्हति वह्निना सह इन्द्रियसन्निकर्षाभावात्, न शाब्दबोधरूपः निश्चयः अयं ; पर्वते वह्निरस्तीत्येद्बोधकवाक्यस्य केनाऽपि तदा अनुच्चरितत्वात्, नाऽपि उपमितिरूपः निश्चयः अयं, तज्जनकसामग्र्याः प्रकृते अभावात् । तस्मात् प्रत्यक्षोपमितिशाब्दबोधेभ्यः विलक्षणः कश्चन अनुभवः ‘पर्वतो वह्निमान्’ इत्याकारकः अस्य पुरुषस्य जायते इत्यवश्यम् अङ्गीकर्तव्यम् । अयमेव निश्चयः ‘अनुमितिः’ इति शब्देन दार्शनिकैः व्यवह्रियते । अस्याः अनुमितेः उत्पत्त्यर्थम् अपेक्षितानि यानि ज्ञानानि तत्स्वरूपं क्रमश्च इत्येतदुभयं निरूपणीयमस्ति । तत्र च आदौ अयं पुरुषः महानसे गोशालायां चत्वरे च वह्निधूमयोः सहचरितयोः दर्शनात् भूयो दर्शनं प्राप्नोति इति अङ्गीकर्तव्यम् ।

तादृशभूयोदर्शनेन[1] सः निश्चिनोति यत् ‘यत्र यत्र धूमः तत्र तत्र  वह्निः’ इति  । अयमेव निश्चयः व्याप्त्यनुभवः[2] इत्युच्यते । तदुत्तरं पर्वतं गतः सः पुरुषः पर्वते विद्यमानं धूमं पश्यन् ‘पर्वतः धूमवान्’ इति ज्ञानं प्राप्नोति ; इदमेव ज्ञानं पक्षधर्मताज्ञान[3]मित्युच्यते  । तदानीं तस्य सन्देहः भवति ; ‘पर्वतः वह्निमान् न वा’[4] इति । अयमेव साध्यसन्देहः[5] इत्युच्यते । तदुत्तरं सः स्मरति यत् ‘यत्र यत्र धूमः तत्र तत्र वह्निरिति’ ; इदमेव व्याप्तिस्मरणमित्युच्यते । तदुत्तरं ‘वह्निव्याप्यधूमवान् अयं पर्वतः’[6] इति ज्ञानं जायते ; इदमेव ज्ञानं परामर्शः इत्युच्यते । तदुत्तरं ‘पर्वतो वह्निमान्’ इत्यनुमितिरुत्पद्यते । अयं सर्वोऽपि विषयः अधोदत्तायां पेटिकायां सङ्गृह्यते ;

| | | | |
|---|---|---|---|
| | पक्षः साध्यवान् हेतुमत्त्वात् | ‘पर्वतो, वह्निमान्, धूमात्’ | ज्ञानस्य पारिभाषिकं नाम |
| १ | | | |

| | | | |
|---|---|---|---|
| | हेतुसाध्ययोः सहचरितयोः अनेकत्र दर्शनम् | वह्निधूमयोः सहचरितयोः अनेकत्र दर्शनम् | भूयो दर्शनम् |
| २ | यत्र यत्र हेतुः तत्र तत्र साध्यम् | यत्र यत्र धूमः तत्र तत्र वह्निः | व्याप्त्यनुभवः |
| ३ | पक्षः हेतुमान् | पर्वतः धूमवान् | पक्षधर्मताज्ञानम् |
| ४ | पक्षः साध्यवान् न वा | पर्वतः वह्निमान् न वा | साध्यसन्देहः |

| | | | |
|---|---|---|---|
| ५ | यत्र यत्र हेतुः तत्र तत्र साध्यम् | यत्र यत्र धूमः तत्र तत्र वह्निः | व्याप्ति स्मरणम् |
| ६ | साध्यव्याप्यहेतुमान् पक्षः | वह्निव्याप्यधूमवान् पर्वतः | परामर्शः |
| ७ | पक्षः साध्यवान् | पर्वतः वह्निमान् | अनुमितिः |

अनुमानप्रमाणपरिज्ञानस्य उपयोगः

सर्वऽपि जनः स्वस्य व्यवहारकाले परानभिमतं विषयं वा परेण अज्ञातं विषयं वा परस्मै साधयितुं वादं करोतीति दृश्यते ।

वादकाले परस्मै परानभिमतं परेणाऽज्ञातं विषयं वा साधयितुं न्यायप्रयोगः कर्त्तव्यः भवति ।

न्यायप्रयोगकाले च हेत्वाभासादिदोषशुन्यः हेतुः प्रयोक्तव्यः भवति अन्यथा वादिनः पराजयः स्यात् । अनुमानप्रमाणस्य अध्ययनेन वादी न्यायप्रयोगे कुशलो भवति । अनुमानप्रमाणस्य अध्ययनं तु स्वार्थानुमितौ न तथा उपयुज्यते ; दर्शनेषु प्रतिपाद्यमानस्य अनुमानप्रमाणस्य अध्ययनं परिशीलनं विनाऽपि पामरादिपर्यन्तजनानाम् अनुमितेः दर्शनात् । तथा च स्वार्थानुमित्यर्थम् अनुमानप्रमाणस्य अध्ययनं परिशीलनं वा नापेक्षितं किन्तु परार्थानुमित्यर्थम् । तदिदम् एकेन उदाहरणेन स्पष्टीकरोमि ; एकः राजपुरुषः कञ्चन अपराधिनम् काराग्रहस्य अन्तः स्थापयित्वा तत्पिधानं कृत्वा स्वगृहं प्रत्यागतः, तस्य स्वपत्न्या सह इत्थं संवादः जातः ;

पत्नी : ‘सः अपराधी इदानीं कारग्रहे अस्ति वा ?’

राजपुरुषः : ‘सः इदानीं काराग्रहे अस्ति’ ।

पत्नी : ‘सः इदानीं काराग्रहे अस्ति इति कथं वक्तुं शक्यते भवता ? भवान् तु अत्र अस्ति’ ।

राजपुरुषः : ‘अहं तु काराग्रहं पिधायैव आगतवान् तस्मात् सः इदानीं काराग्रहे एव अस्ति’ ।

पत्नी : ननु काराग्रहस्य तदि अन्यत् अपिहितं द्वारं स्यात् तर्हि सः तेन सः निर्गतवान् स्यात् खलु ?

राजपुरुषः :  नास्ति काराग्रहस्य अन्यत् द्वारं तस्मात् सः काराग्रहस्य अन्तः एव अस्ति ।

पत्नी :  ननु काराग्रहस्य कुञ्चिका यदि अन्तः एव अस्ति तर्हि तया द्वारं उद्घाट्य बहिरागतवान्स्यात् खलु ?

राजपुरुषः :  कुञ्जिका तु मम सविधे एव अस्ति, तस्मात् सः काराग्रहस्य अन्तः एव अस्ति ।

पत्नी :   ननु काराग्रहान्तर्वर्तिना मुद्गरादिकरणविशेषेण तालं भङ्क्त्वा बहिरागतवान् स्यात्खलु  ?

राजपुरुषः :  तालभङ्गार्थम् अपेक्षितः मुद्गरादिकरणविशेषः काराग्रहस्य अन्तः नास्ति तस्मात् सः काराग्रहस्य अन्तः एव अस्ति ।

पत्नी :  ननु स्वहस्ताभ्यामेव स तालं भङ्क्त्वा बहिरागतवान् स्यात् खलु ?

राजपुरुषः :  तस्य हस्तौ तु शृङ्खलया बद्धौ स्तः इति कृत्वा सः तालं भङ्क्तुं न शक्नोतीति कृत्वा सः काराग्रहस्य अन्तः एव अस्ति ।

पत्नी  :  अस्तु, अहम् अङ्गीकरोमि ।

‘सः अपराधी इदानीं कारग्रहे अस्ति वा ?’ इति पत्नीप्रश्नोत्तरं ‘अपराधी इदानीं कारग्रहे अस्ति’ इति वदतः राजपुरुषस्य स्वार्थानुमितिस्तु क्षणात् उत्पन्ना इत्यवगन्तव्यम् । परन्तु इमं विषयं तु स्वपत्नीम् प्रति बोधयितुम् न्यायप्रयोगं यदा करोति तदा तु तर्केण प्रश्नं पृच्छन्तीं पत्नीं प्रत्याययितुं स्वहेतुनिर्देशं परिष्करोति सः बुद्धिमान् राजपुरुषः । ‘अहं तु काराग्रहं पिधायैव आगतवान् तस्मात् सः इदानीं काराग्रहे एव अस्ति’ इति वदता राजपुरुषेण अपराधी, इदानीं काराग्रहे वर्तते[7], पिहितद्वारककाराग्रहनिविष्टत्वात्, अपराध्यन्तरवत् इति अनुमानप्रयोगः विवक्षितः । तत्र स्वपत्न्या अप्रयोजकत्वशङ्कायां कृतायां ‘नास्ति काराग्रहस्य अन्यत् द्वारं तस्मात् सः काराग्रहस्य अन्तः एव अस्ति’ इति प्रत्युत्तरयता राजपुरुषेण द्वारान्तरासहितपिहितद्वारककारग्रहनिविष्टत्वम् इत्येवं परिष्कृतः हेतुः विवक्षितः । तत्राऽपि स्वपत्न्या अप्रयोजकत्वशङ्कायां कृतायां ‘कुञ्जिका तु मम सविधे एव अस्ति, तस्मात् सः काराग्रहस्य अन्तः एव अस्ति ।’ इत्येवं समादधता राजपुरुषेण द्वारान्तरासहितपिहितद्वारककारग्रहनिविष्टत्वे सति कुञ्चिकारहितत्वम् इति हेतुस्वरूपं विवक्ष्यते । तत्राऽपि पूर्वोक्तां अप्रयोजकत्वशङ्कां वारयितुम् ‘तालभङ्गार्थम् अपेक्षितः मुद्गरादिकरणविशेषः काराग्रहस्य अन्तः नास्ति तस्मात् सः काराग्रहस्य अन्तः एव अस्ति ।’ इति कथयता राजपुरुषेण

द्वारान्तरासहितपिहितद्वारककारग्रहनिविष्टत्वे सति कुञ्चिकारहितत्वे सति तालभञ्जककरणरहित्वम् इत्येवं हेतुः विवक्षितः। तदुत्तरमपि  तस्य हस्तौ तु शृङ्खलया बद्धौ स्तः इति कृत्वा सः तालं भङ्क्तुं न शक्नोतीति कृत्वा सः कारागृहस्य अन्तः एव अस्ति।' इत्येवं वदता राजपुरुषेण अन्ततो गत्वा अपराधी, इदानीं कारागृहे वर्तते, द्वारान्तरासहितपिहितद्वारककारग्रहनिविष्टत्वे सति कुञ्चिकारहितत्वे सति तालभञ्जककरणरहित्वे सति बद्धहस्तत्वात्, सम्मतवत्[8]' इति अनुमानप्रयोगः विवक्षितः। एवं रीत्या न्यायप्रयोगकाले पक्षसाध्यहेत्वादीनां सम्यक् निर्देशं कर्तुं अनुमानप्रमाणस्य गाढम् अध्ययनम् उपकरोति।  न केवलं न्यायप्रयोगाय अनुमानप्रमाणाध्ययनस्य उपयोगः किन्तु परकीयन्यायप्रयोगावमनाय तद्विशकलनाय तद्विमर्शाय च अनुमानप्रमाणस्य अध्ययनम् उपकरोति।

अनुमानप्रमाणस्य लोके उपयोगः

अनुमानप्रमाणं एकस्य लैकिकजीवने अत्यन्तं प्राधान्यम् आवहति इति निस्संशयं वक्तुं शक्यम्। तन्निरूपणाय एकः स्थलविशेषः प्रदर्श्यते। एकः स्वक्षुन्निवर्तनाय अन्नभोजनं कर्तुं निर्णयं कृत्वा तदिच्छन्  तत् करिष्यति। अत्रेदं प्रष्टव्यम्;

करिष्यमाणस्य अन्नभोजनस्य क्षुन्निवर्तकत्वं कथमयं पुरुषः इदानीम् अवगतवान् ? नूनं न प्रत्यक्षोपमानशब्दप्रमाणैः इति कृत्वा अनुमानप्रमाणेनैव अयं पुरुषः तत अवगतवान् इति वक्तव्यम् । तथ च अत्र अनुमानप्रयोगः कथं स्यात् इति पृष्टे इति जिज्ञासायाम् करिष्यमाणान्नभोजनं, क्षुन्निवर्तकम्, अन्नभोजनत्वात्, ह्यस्तनान्नभोजनवत् इति अनुमानप्रयोगः अत्र भवितुमर्हति । अत्राऽपि अनुमित्युत्पत्तिक्रमः अधः प्रदर्श्यते ;

| | | | |
|---|---|---|---|
| | पक्षः साध्यवान् हेतुमत्त्वात् | प्रकृतस्थले | ज्ञानस्य पारिभाषिकं नाम |
| १ | हेतुसाध्ययोः सहचरितयोः | क्षुन्निवर्तकत्वान्नभोजनत्व | भूयो दर्शनम् |

| | | | |
|---|---|---|---|
| | अनेकत्र दर्शनम् | योः सहचरितयोः अनेकत्र दर्शनम् | |
| २ | यत्र यत्र हेतुः तत्र तत्र साध्यम् | यत्र यत्र अन्नभोजनत्वं तत्र तत्र क्षुन्निवर्तकत्वम् | व्याप्त्यनुभवः |
| ३ | पक्षः हेतुमान् | इदम् अन्नभोजनत्ववत् | पक्षधर्मताज्ञानम् |

| | | | |
|---|---|---|---|
| ४ | पक्षः साध्यवान् न वा | अन्नभोजनं क्षुन्निवर्तकं न वा | साध्यसन्देहः |
| ५ | यत्र यत्र हेतुः तत्र तत्र साध्यम् | यत्र यत्र अन्नभोजनत्वं तत्र तत्र क्षुन्निवर्तकत्वम् | व्याप्तिस्मरणम् |
| ६ | साध्यव्याप्यहेतुमान् पक्षः | क्षुन्निवर्तकत्वव्याप्यान्न-भोजनत्ववत् इदम् | परामर्शः |

| | | | |
|---|---|---|---|
| ७ | पक्षः साध्यवान् | अन्नभोजनं क्षुन्निवर्तकम् | अनुमितिः |

एवं रीत्या सामान्यजनैः लौकिकव्यवहारकाले ज्ञात्वा वा अज्ञात्वा वा अनुमाणप्रमाणस्य उपयोगं कुर्वन्ति इति ज्ञातव्यम् । अन्यानि अपि स्थलानि एतादृशानि सूधीभिः विभावनीयानि ।

अनुमानप्रमाणस्य शास्त्रे  उपयोगः

एवमेव अनुमानप्रमाणस्य शास्त्रीयविचारपद्धतावपि महान् उपकारः अस्ति । उदाहरणार्थं प्रायेण सर्वेऽपि आस्तिकाः ईश्वरम् अङ्गीकुर्वन्ति । अस्य च ईश्वरस्य सद्भावे अनुमानप्रमाणमपि उपन्यस्यन्ति । तत्र नैयायिकाः ईश्वरसद्भावसाधने इत्थम् अनुमानप्रयोगं कुर्वन्ति ; क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत् इति । एवञ्च सति प्रकृतस्थले अनुमित्युत्पत्तिपक्रिया इत्थं भवति ;

| | | | |
|---|---|---|---|
| | पक्षः साध्यवान् हेतुमत्त्वात् | प्रकृतस्थले | ज्ञानस्य पारिभाषिकं नाम |
| १ | हेतुसाध्ययोः सहचरितयोः अनेकत्र दर्शनम् | कर्तृजन्यत्वकार्यत्वयोः सहचरितयोः अनेकत्र दर्शनम् | भूयोदर्शनम् |
| २ | यत्र यत्र हेतुः तत्र | यत्र यत्र कार्यत्वं तत्र तत्र | व्याप्त्यनुभवः |

| | | | |
|---|---|---|---|
| | तत्र साध्यम् | कर्तृजन्यत्वम् | |
| ३ | पक्षः हेतुमान् | कर्तृजन्यत्वव्याप्यकार्यत्ववत् क्षित्यङ्कुरादिकम् | पक्षधर्मताज्ञानम् |
| ४ | पक्षः साध्यवान् न वा | क्षित्यङ्कुरादिकं कर्तृजन्यं न वा | साध्यसन्देहः |
| ५ | यत्र यत्र हेतुः तत्र तत्र साध्यम् | यत्र यत्र कार्यत्वं तत्र तत्र | व्याप्तिस्मरणम् |

| | | | |
|---|---|---|---|
| | | कर्तृजन्यत्वम् | |
| ६ | साध्यव्याप्यहेतुमान् पक्षः | कर्तृजन्यत्वव्याप्यकार्यत्ववत् क्षित्यङ्कुरादिकम् | परामर्शः |
| ७ | पक्षः साध्यवान् | क्षित्यङ्कुरादिकं कर्तृजन्यम् | अनुमितिः |

अनेन अनुमानेन यः जीवविलक्षणः कर्ता सिद्ध्यति सः ईश्वरः इत्युच्यते । एवं रीत्या शास्त्रीयपदार्थनिरूपणे अनुमानप्रमाणम् अत्यन्तं प्राधान्यम् आवहति ।

## Finding and Conclusions

तथा च स्वयं न्यायप्रयोगान् कर्तुं, परकीयस्य न्यायप्रयोगस्य अवगमनाय, स्वकीयस्य वा परकीयस्य वा न्यायप्रयोगस्य विमर्शनाय, बुद्धिवैशद्याय च दर्शनेषु प्रतिपाद्यस्य अनुमानप्रमाणस्य परिज्ञानं सर्वेषां कृते उपकाराय भवतीति निस्संशयं वक्तुं शक्यम् ।

## End Notes

**1**

, मानमेयोदयः, प्रमाणखण्डः, पञ्चमः श्लोकः

**2**

, मानमेयोदयः, प्रमाणखण्डः, षष्ठः श्लोकः

**3**

, वस्तुतस्तु भूयोदर्शनाभावेऽपि व्यभिचारज्ञानविरहसहकृतसहचारज्ञानमात्रेण व्याप्तेः

गृह्यमाणत्वात् भूयोदर्शनम् इत्यस्य स्थानेव्यभिचार ज्ञानविरहसहकृतसहचार ज्ञानम् भवतीत्यवगन्तव्यम् ।

**4**

, व्याप्तिर्नाम नियतसाहचर्यं । धूमस्तु वह्निं विना कुत्राऽपि न वर्तते इति कृत्वा धूमः वह्नेः नियतः सहचारी भवति ; तथा च वह्निनियतसाहचर्यं धूमे वर्तते । यत्र यत्र धूमः तत्र तत्र वह्निः इति ज्ञानेन वह्निनियतसाहचर्यरूपा व्याप्तिः धूमे गृह्यते इति कृत्वा अयमनुभ

**5**

, यत्र किञ्चित् साध्यते सः पक्षः इत्युच्यते । धर्मो नाम वृत्तिपदार्थः । तथा च पक्षधर्मता नाम पक्षवृत्तित्वम् । प्रकृते पर्वते वह्निः साधयितुमिष्टः इति कृत्वा पर्वतः पक्षः भवति । धूमश्च पर्वतरूपपक्षे वर्तते इति कृत्वा धूमः पक्षस्य धर्मो भवति । तथा च धूमे

**6**

, एतादृशसन्दर्भे ‘पर्वतः वह्निमान् न वा’ इति सन्देहस्तु नियमेन सर्वेषां न दृश्यते । तस्मात् अनुमित्युत्पत्त्यर्थम् इदम् अवश्यापेक्षितं नास्ति । पक्षधर्मताज्ञानोत्तरं साध्यसन्देहं विनैव परामर्शः भवितुमर्हतीत्याशयः ।

**7**

, यत् साध्यते तत् साध्यम् इत्युच्यते । प्रकृते पुरुषेण पर्वते वह्निः साध्यते इति कृत्वा वह्निरेव साध्यमित्युच्यते ।

**8**

, यत्र यत्र धूमः तत्र तत्र वह्निः इति व्याप्तौ धूमः व्याप्यः, वह्निः व्यापकः इत्युच्यते । व्याप्यः नाम नियतसहचारी । पर्वते विद्यमानस्य धूमस्य धूमत्वेन अवगमनं पक्षधर्मताज्ञानेन जातम् । अस्यैव धूमस्य यावता

वह्निनियतसहचारित्वेन ज्ञानं नास्ति तावता धूमेन वह्नि

**9**

, कारागृहनिरूपितवर्तमानकालावच्छिन्नाधेयतावान् इति वा साध्यनिर्देशः बोध्यः ।

**10**

, अत्राऽपि यदि कश्चन दोषः सम्भाव्यते तर्हि परिष्कारः कर्तव्यः ।

## Citations


**1** अन्नंभट्टः,   चौखम्बा विद्याभवन, वाराणसी,,   २०००

**2** विश्वनाथपञ्चाननः,   चौखम्बा कृष्णदास अकादमी, २००५